पत्र*-प्रवाल-पुष्प-फल-गुल्म-गुच्छ†-लता-वल्ली-तृण-पर्वकायशै-
वाल-पनक-वलक-कुहन‡जातिनामादि ॥ एवं द्वीन्द्रियजाति-
नामानेकविधम् । एवं त्रीन्द्रियचतुरिन्द्रियपञ्चेन्द्रियजातिनामा-
दीन्यपि ॥

5 **शरीरनाम** पञ्चविधम् । तद्यथा । औदारिकशरीरनाम
वैक्रियशरीरनाम आहारकशरीरनाम तैजसशरीरनाम कार्मण-
शरीरनामेति§॥ **अङ्गोपाङ्गनाम** त्रिविधम् । तद्यथा । औदारि-
काङ्गोपाङ्गनाम वैक्रियशरीराङ्गोपाङ्गनाम आहारकशरीराङ्गो-
पाङ्गनाम । पुनरेकैकमनेकविधम् । तद्यथा । अङ्गनाम तावत्
10 शिरोनाम उरोनाम पृष्ठनाम बाहुनाम उदरनाम पादनाम ॥
उपाङ्गनामानेकविधम् । तद्यथा । स्पर्शनाम रसनाम घ्राणनाम
चक्षुर्नाम|| श्रोत्रनाम । तथा मस्तिष्ककपालकृकाटिकाशङ्खललाट-
तालुकपोलहनुचिबुकदशनौष्ठभ्रूनयनकर्णनासाद्युपाङ्ग¶नामानि
शिरसः । एवं सर्वेषामङ्गानामुपाङ्गानां नामानि ॥ जाति-
15 लिङ्गाकृतिव्यवस्थानियामकं **निर्माणनाम** ॥ सत्यां प्राप्तौ निर्मि-
तानामपि शरीराणां बन्धकं **बन्धननाम** । अन्यथा हि वालु-
कापुरुषवदबद्धानि शरीराणि स्युरिति ॥ बद्धानामपि च
संघातविशेषजनकं प्रचयविशेषात्**संघातनाम** दारुमृत्पिण्डायः-
संघातवत्** ॥ **संस्थाननाम** षड्विधम् । तद्यथा । समचतुरस्रनाम

*• ACK पर for पत्र D puts त्वक् ।　　† C गच्छ ।
‡ KD कुहिन ।　　§ K omits इति ।　　|| K चक्षुनाम ।
¶ KP omit उपांग ।　　** Vars दारुमृत्पिण्डसंघात० ।

न्यग्रोधपरिमण्डलनाम सादिनाम* कुब्जनाम वामननाम हुण्ड-नामेति॥ **संहनननाम** षड्विधम्। तद्यथा। वज्रर्षभनाराचनाम अर्धवज्रर्षभनाराचनाम† नाराचनाम अर्धनाराचनाम कीलिकानाम सृपाटिकानामेति॥ **स्पर्शनामा**ष्टविधं कठिननामादि॥ **रसनामा**नेकविधं तिक्तनामादि॥ **गन्धनामा**नेकविधं सुरभिगन्धनामादि॥ **वर्णनामा**नेकविधं कालकनामादि॥ गतावुत्पत्तुकामस्यान्तर्गतौ वर्तमानस्य तदभिमुखमानुपूर्व्या तत्प्रापणसमर्थ**मानुपूर्वीनामे**ति। निर्माणनिर्मितानां शरीराङ्गोपाङ्गानां विनिवेश‡क्रमनियामकमानुपूर्वीनामेत्यपरे॥ अगुरुलघुपरिणामनियामक**मगुरुलघुनाम**॥ शरीराङ्गोपाङ्गोपघातक**मुपघातनाम** स्वपराक्रमविजयाद्युपघातजनकं वा॥ परत्रास§प्रतिघातादिजनकं **पराघातनाम**॥ आतपसामर्थ्यजनक**मातपनाम**॥ प्रकाशसामर्थ्यजनक**मुद्योतनाम**॥ प्राणापानपुद्गलग्रहणसामर्थ्यजनक**मुच्छ्वासनाम**॥ लब्धिशिक्षर्द्धिप्रत्ययस्याकाशगमनस्य जनकं **विहायोगतिनाम**॥

पृथक्शरीरनिर्वर्तकं **प्रत्येकशरीरनाम**। अनेकजीवसाधारणशरीरनिर्वर्तकं **साधारणशरीरनाम**। त्रसभावनिर्वर्तकं **त्रसनाम**। स्थावरभावनिर्वर्तकं **स्थावरनाम**। सौभाग्यनिर्वर्तकं **सुभगनाम**। दौर्भाग्यनिर्वर्तकं **दुर्भगनाम**। सौस्वर्यनिर्वर्तकं

* D सादि।

† नाराच only in C. D omits अर्धवज्र। D स्वपादिकानामेति।

‡ C विनिवेशन।

§ K adds आकर्षण।

सुस्वरनाम। दौस्वर्यनिर्वर्तकं दुःस्वरनाम। शुभभावशोभामाङ्गल्य
निर्वर्तकं शुभनाम। तद्विपरीतनिर्वर्तकमशुभनाम। सूक्ष्म-
शरीरनिर्वर्तकं सूक्ष्मनाम। बादरशरीरनिर्वर्तकं बादरनाम॥
पर्याप्तिः पञ्चविधा। तद्यथा। आहारपर्याप्तिः शरीरपर्याप्तिः
5 इन्द्रियपर्याप्तिः प्राणापानपर्याप्तिः भाषापर्याप्तिरिति। पर्याप्तिः
क्रियापरिसमाप्तिरात्मनः। शरीरेन्द्रियवाङ्मनःप्राणापानयोग्य-
दलिकद्रव्याहरणक्रियापरिसमाप्तिराहारपर्याप्तिः। गृहीतस्य
शरीरतया संस्थापनक्रियापरिसमाप्तिः शरीरपर्याप्तिः। संस्था-
पनं रचना घटनमित्यर्थः। त्वगादीन्द्रियनिर्वर्तनक्रियापरि-
10 समाप्तिरिन्द्रियपर्याप्तिः। प्राणापानक्रियायोग्यद्रव्यग्रहणनिसर्ग-
शक्तिनिर्वर्तनक्रियापरिसमाप्तिः प्राणापानपर्याप्तिः। भाषा-
योग्यद्रव्यग्रहणनिसर्गशक्तिनिर्वर्तनक्रियापरिसमाप्तिर्भाषापर्याप्तिः।
मनस्त्व*योग्यद्रव्यग्रहणनिसर्गशक्तिनिर्वर्तनक्रियासमाप्तिर्मनःपर्या-
प्तिरित्येके। आसां युगपदारब्धानामपि क्रमेण समाप्तिरुत्त-
15 रोत्तरसूक्ष्मत्वात् सूत्रदार्वादिकर्तन†घटनवत्। यथासङ्ख्यं च
निदर्शनानि गृहदलिकग्रहणस्तम्भस्थूणाद्वारप्रवेशनिर्गमस्थान-
शयनादिक्रियानिर्वर्तनानीति। पर्याप्तिनिर्वर्तकं पर्याप्तिनाम
‡अपर्याप्तिनिर्वर्तकमपर्याप्तिनाम अपर्याप्तिनाम§ तत्परि-
णामयोग्यदलिकद्रव्यमात्मनानोपात्तमित्यर्थः|| ॥ स्थिरत्वनिर्वर्तकं

* K मनस्व। † K and C omit कर्तन। ‡ D omits अपर्याप्तिनाम।
§ S probably omits from अपर्याप्तिनाम to त्तमित्यर्थः।
|| D द्रव्यमात्मणोपात्तमित्यर्थः।

स्थिरनाम । विपरीतमस्थिरनाम । आदेयभाव*निर्वर्तकमादेयनाम । विपरीतमनादेयनाम । यशोनिर्वर्तकं यशोनाम । विपरीतमयशोनाम । तीर्थकरत्वनिर्वर्तकं तीर्थकरनाम । तांस्तान्†भावान्नामयतीति नाम । एवं सोत्तरभेदो नामकर्मभेदो ऽनेकविधः प्रत्येतव्यः ‡ ॥ 5

## उच्चैर्नीचैश्च ॥ १३ ॥

उच्चैर्गोत्रं नीचैर्गोत्रं च‡ । तत्रोच्चैर्गोत्रं देशजातिकुलस्थानमानसत्कारैश्वर्याद्युत्कर्षनिर्वर्तकम् । विपरीतं नीचैर्गोत्रं चण्डालमुष्टिक§व्याधमत्स्यबन्धदास्यादिनिर्वर्तकम् ॥

## दानादीनाम्‖ ॥ १४ ॥ 10

अन्तरायः¶ पञ्चविधः** । तद्यथा । दानस्यान्तरायः लाभस्यान्तरायः भोगस्यान्तरायः उपभोगस्यान्तरायः वीर्यान्तराय इति ॥

उक्तः प्रकृतिबन्धः । स्थितिबन्धं वक्ष्यामः ।

## आदितस्तिसृणामन्तरायस्य†† च त्रिंशत्सागरोपमकोटीकोट्यः परा स्थितिः ॥ १५ ॥ 15

---

* B adds भाव । † K तान् only once. ‡ CD add द्विभेदं गोत्रम् ।
§ मौष्टिक D मौष्टिक । ‖ D दानलाभभोगोपभोगवीर्याणाम् C adds अन्तरायः ।
¶ D दानादीनामन्तरायः । ** C omits .
†† P doubts whether अन्तरायस्य is a part of the text.

आदितस्तिसृणां कर्मप्रकृतीनां ज्ञानावरणदर्शनावरणवेद्या-नामन्तरायप्रकृतेश्च त्रिंशत्सागरोपमकोटीकोट्यः परा स्थितिः ॥

सप्ततिर्मोहनीयस्य ॥ १६ ॥

*मोहनीयकर्मप्रकृतेः सप्ततिः सागरोपमकोटीकोट्यः परा
5 स्थितिः ॥

नामगोत्रयोर्विंशतिः ॥ १७ ॥

नामगोत्रप्रकृत्योर्विंशतिः सागरोपमकोटीकोट्यः परा
स्थितिः ॥

त्रयस्त्रिंशत्सागरोपमाण्यायुष्कस्य† ॥ १८ ॥

10 आयुष्कप्रकृतेस्त्रयस्त्रिंशत्सागरोपमाणि परा स्थितिः ॥

अपरा द्वादशमुहूर्ता वेदनीयस्य ॥ १९ ॥

वेदनीयप्रकृतेरपरा द्वादश मुहूर्ताः स्थितिरिति ॥

नामगोत्रयोरष्टौ ॥ २० ॥

नामगोत्रप्रकृत्योरष्टौ मुहूर्ता अपरा स्थितिर्भवति ॥

15 शेषाणामन्तर्मुहूर्तम्‡ ॥ २१ ॥

* D adds मोहनीयस्य। † A ०ण्यायषः। ‡ A ०मुहूर्ता K ०मुहूर्ताम्।

वेदनीयनामगोत्रप्रकृतिभ्यः शेषाणां ज्ञानावरणदर्शनावरण-मोहनीयायुष्कान्तरायप्रकृतीनामपरा स्थितिरन्तर्मुहूर्तं* भवति ॥

उक्तः स्थितिबन्धः । अनुभावबन्धं† वक्ष्यामः ।

## विपाको ऽनुभावः ॥ २२ ॥

सर्वासां प्रकृतीनां फलं विपाकोदयो ऽनुभावो भवति‡ । 5
विविधः पाको विपाकः स तथा चान्यथा चेत्यर्थः । जीवः कर्म-विपाकमनुभवन् कर्मप्रत्ययमेवानाभोगवीर्यपूर्वकं कर्मसंक्रमं करोति§ उत्तरप्रकृतिषु सर्वासु मूलप्रकृत्यभिन्नासु न तु मूलप्रकृतिषु संक्रमो विद्यते बन्धविपाकनिमित्तान्यजातीयकत्वात् । उत्तर-प्रकृतिषु च दर्शनचारित्रमोहनीययोः सम्यग्मिथ्यात्ववेदनीयस्या- 10
युष्कस्य च जात्यन्तरानुबन्धविपाकनिमित्तान्यजातीयकत्वादेव संक्रमो न विद्यते । अपवर्तनं तु सर्वासां प्रकृतीनां विद्यते । तदायुष्केण व्याख्यातम् [II. 52] ॥

## स यथा नाम ॥ २३ ॥

सो ऽनुभावो गतिनामादीनां यथा नाम विपच्यते ॥ 15

## ततश्च निर्जरा ॥ २४ ॥

ततश्चानुभावात्कर्मनिर्जरा भवतीति|| । निर्जरा क्षयो वेद-

* D °न्तर्मुहूर्ता । † C °नुभाग । ‡ C adds इति ।
§ D निमित्तश्चान्य । || CD omits इति ।

नेत्यर्थः* । अत्र चशब्दो हेत्वन्तरमपेक्षते तपसा निर्जरा चेति वक्ष्यते [ IX. 3 ] ॥

उक्तो ऽनुभावबन्धः । प्रदेशबन्धं वक्ष्यामः ।

**नामप्रत्ययाः सर्वतो योगविशेषात्सूक्ष्मैकक्षेत्रा-वगाढ†स्थिताः सर्वात्मप्रदेशेष्वनन्तानन्तप्रदेशाः ॥ २५ ॥**

नामप्रत्ययाः पुद्गला बध्यन्ते‡ । नाम प्रत्यय एषां ते इमे नामप्रत्ययाः । नामनिमित्ता नामहेतुका नामकारणा इत्यर्थः । सर्वतस्तिर्यगूर्ध्वमधश्च बध्यन्ते । योगविशेषात् कायवाङ्मनः-कर्मयोग§विशेषाच्च बध्यन्ते । सूक्ष्मा बध्यन्ते न बादराः । एक-क्षेत्रावगाढा|| बध्यन्ते न क्षेत्रान्तरावगाढाः । स्थिताश्च बध्यन्ते न गतिसमापन्नाः । सर्वात्मप्रदेशेषु सर्वप्रकृतिपुद्गलाः सर्वात्मप्रदेशेषु बध्यन्ते। एकैको ह्यात्मप्रदेशो ऽनन्तैः¶ कर्मप्रदेशैर्बद्धः। अनन्ता-नन्तप्रदेशाः कर्मग्रहणयोग्याः पुद्गला बध्यन्ते न सङ्ख्यासङ्ख्येयान-न्तप्रदेशाः । कुतोऽग्रहणयोग्यत्वात्प्रदेशानामिति एष प्रदेशबन्धो भवति ॥

सर्वं चैतदष्टविधं कर्म पुण्यं पापं च ।

तत्र

* C वेदनेत्यनर्थान्तरम् ।
† D अवगाढ ।
‡ C पच्यन्ते ।
§ C omits योग ।
|| D एकक्षेत्रावगाढा ।
¶ K अनन्तानन्तैः

**सद्वेद्यसम्यक्त्वहास्यरतिपुरुषवेदशुभायुर्नामगोत्राणि पुण्यम् ॥ २६ ॥**

सद्वेद्यं भूतव्रत्यनुकम्पादिहेतुकम् सम्यक्त्ववेदनीयं केवलिश्रुतादीनां वर्णवादादिहेतुकम् हास्यवेदनीयं रतिवेदनीयं पुरुषवेदनीयं शुभमायुष्कं मानुषं दैवं च शुभनाम गतिनामादीनां 5 शुभं गोत्रमुच्चैर्गोत्रमित्यर्थः । इत्येतदष्टविधं कर्म पुण्यम्, अतोऽन्यत्पापम् ॥

इति तत्त्वार्थाधिगमेऽर्हत्प्रवचनसंग्रहे

ऽष्टमोऽध्यायः समाप्तः ॥

## अथ नवमोऽध्यायः।

उक्तो बन्धः। संवरं वक्ष्यामः

### आस्रवनिरोधः संवरः ॥ १ ॥

यथोक्तस्य काययोगादेर्द्विचत्वारिंशद्विधस्यास्रवस्य निरोधः संवरः।

5 **स गुप्तिसमितिधर्मानुप्रेक्षापरीषहजयचारित्रैः ॥ २ ॥**

स एष संवर एभिर्गुप्त्यादिभिरभ्यु*पायैर्भवति। किं चान्यत्।

### तपसा निर्जरा च ॥ ३ ॥

तपो† द्वादशविधं वक्ष्यते [IX. 19, 20]। तेन संवरो भवति निर्जरा च॥

10 अत्राह। उक्तं भवता गुप्त्यादिभिरभ्युपायैः संवरो भवतीति। तत्र के गुप्त्यादय इति। अत्रोच्यते

### सम्यग्योगनिग्रहो गुप्तिः ॥ ४ ॥

सम्यगिति विधानतो ज्ञात्वाभ्युपेत्य सम्यग्दर्शनपूर्वकं त्रिविधस्य योगस्य निग्रहो गुप्तिः कायगुप्तिर्वाग्गुप्तिर्मनोगुप्ति-

* MSS ॰भिरुपा॰। † K adds संवरश्च।

रिति। तत्र शयनासनादाननिक्षेपस्थानचंक्रमणेषु कायचेष्टानियमः कायगुप्तिः। याचनपृच्छनपृष्टव्याकरणेषु वाङ्नियमो मौनमेव वा* वाग्गुप्तिः। सावद्यसंकल्पनिरोधः† कुशलसंकल्पः कुशलाकुशलसंकल्पनिरोध एव वा मनोगुप्तिरिति ॥

## ईर्याभाषैषणादाननिक्षेपोत्सर्गाः समितयः ॥ ५ ॥ 5

सम्यगीर्या सम्यग्भाषा सम्यगेषणा सम्यगादाननिक्षेपौ सम्यगुत्सर्ग इति पञ्च समितयः॥ तत्रावश्यकायैव संयमार्थं सर्वतो युगमात्रनिरीक्षणायुक्तस्य शनैर्न्यस्तपदा‡ गतिरीर्यासमितिः। हितमितासंदिग्धानवद्यार्थ§नियतभाषणं भाषासमितिः। अन्नपानरजोहरणपात्रचीवरादीनां धर्मसाधनानामाश्रयस्य चोद्गमो- 10 त्पादनैषणादोषवर्जनमेषणासमितिः। रजोहरणपात्रचीवरादीनां पीठफलकादीनां चावश्यकार्थं निरीक्ष्य प्रमृज्य चादाननिक्षेपौ आदाननिक्षेपणासमितिः। स्थण्डिले स्थावरजङ्गमजन्तुवर्जिते निरीक्ष्य प्रमृज्य च मूत्रपुरीषादीनामुत्सर्ग उत्सर्गसमितिरिति ॥ 15

## उत्तमः क्षमामार्दवार्जवशौचसत्यसंयमतपस्त्यागाकिंचन्यब्रह्मचर्याणि धर्मः ॥ ६ ॥

इत्येष दशविधो ऽनगारधर्मः उत्तमगुणप्रकर्षयुक्तो भवति। तत्र क्षमा तितिक्षा सहिष्णुत्वं क्रोधनिग्रह इत्यनर्थान्तरम्।

* KD omit वा। † D सावद्यविकल्पनिरोधः।
‡ D न्यस्तपादा। § S possibly निरवद्यार्थ।

तत्कथं क्षमितव्यमिति चेदुच्यते। **क्रोधनिमित्तस्यात्मनि भावाभावचिन्तनात्**, परैः प्रयुक्तस्य क्रोधनिमित्तस्यात्मनि भावचिन्तनादभावचिन्तनाद्वा* क्षमितव्यम्†। भावचिन्तनात् तावद्विद्यन्ते मय्येते दोषाः किमत्रासौ मिथ्या ब्रवीति क्षमितव्यम्।
5 अभावचिन्तनादपि क्षमितव्यं नैते विद्यन्ते मयि दोषा यानज्ञानादसौ‡ ब्रवीति§ क्षमितव्यम्। किं चान्यत्। **क्रोधदोषचिन्तनाच्च** क्षमितव्यम्। क्रुद्धस्य हि विद्वेषा||सादनस्मृतिभ्रंशव्रतलोपादयो दोषा भवन्तीति¶। किं चान्यत्। **बालस्वभावचिन्तनाच्च** परोक्षप्रत्यक्षाक्रोशताडन**मारणधर्मभ्रंशा††नामुत्त-
10 रोत्तररक्षार्थम्। बाल इति मूढमाह। परोक्षमाक्रोशति बाले क्षमितव्यमेव‡‡। एवंस्वभावा हि बाला भवन्ति। दिष्ट्या च मां परोक्षमाक्रोशति न प्रत्यक्षमिति§§। लाभ एव मन्तव्य इति||||। प्रत्यक्षमप्याक्रोशति बाले क्षमितव्यं। विद्यत एवैतद्बालेषु। दिष्ट्या च मां प्रत्यक्षमाक्रोशति न ताडयति। एतदप्यस्ति
15 बालेष्विति¶¶ लाभ एव मन्तव्यः। ताडयत्यपि बाले क्षमितव्यम्। एवंस्वभावा हि बाला भवन्ति। दिष्ट्या च मां ताडयति न

* C ०चिन्तनाच्च।

† Perhaps S omits from परैः all down to क्षमितव्यं D omits भावचिन्तनादभावचिन्तनाद्वा क्षमितव्यं।   ‡ D adds मिथ्या।

§ DK add इति।   || K विद्विषात्सादः।   ¶ D omits इति।

** D आक्रोशनताडण।   †† C धर्मभङ्ग।   ‡‡ D omits एव।

§§ C omits इति।   |||| CD मन्तव्यः and omits इति after it.

प्राणैर्वियोजयतीति । एतदपि विद्यते बालेष्विति* । प्राणैर्वियोजयत्यपि बाले क्षमितव्यं । दिष्ट्या च मां प्राणैर्वियोजयति न धर्माद्भ्रंशयतीति क्षमितव्यम् । एतदपि विद्यते बालेष्विति लाभ एव मन्तव्यः ॥ किं चान्यत् । **स्वकृतकर्मफलाभ्यागमाच्च**† । स्वकृतकर्मफलाभ्यागमो ऽयं मम, निमित्तमात्रं पर इति क्षमितव्यम् । किं चान्यत् । क्षमागुणांश्चानायासादीननुस्मृत्य क्षमितव्यमेवेति क्षमाधर्मः ॥ १ ॥ 5

नीचैर्वृत्त्यनुत्सेकौ‡ मार्दवलक्षणम् । मृदुभावः§ मृदुकर्म च|| मार्दवं मदनिग्रहो मानविघातश्चेत्यर्थः¶ । तत्र मानस्येमान्यष्टौ स्थानानि भवन्ति । तद्यथा । जातिः कुलं रूपमैश्वर्यं विज्ञानं श्रुतं लाभो वीर्यमिति । एभिर्जात्यादिभिरष्टाभिर्मदस्थानैर्मत्तः परात्मनिन्दाप्रशंसाभिरतस्तीव्राहंकारोपहतमतिरिहामुत्र चाशुभफलमकुशलं** कर्मोपचिनोत्युपदिश्यमानमपि च श्रेयो न प्रतिपद्यते । तस्मादेषां मदस्थानानां निग्रहो मार्दवं धर्म इति ॥ २ ॥ 10 15

भावविशुद्धिरविसंवादनं चार्जवलक्षणम् । ऋजुभावः ऋजुकर्म वार्जवं भावदोषवर्जनमित्यर्थः । भावदोषयुक्तो ह्युपधिनिकृतिसंप्रयुक्त इहामुत्र चाशुभफलमकुशलं कर्मोपचिनोत्युपदिश्यमानमपि च श्रेयो न प्रतिपद्यते । तस्मादार्जवं धर्म इति ॥ ३ ॥

---

* D adds लाभ एव मन्तव्यः ।
† K ०भ्यागमाच्च ।
‡ D इति ।
§ C मृदुभवो ।
|| K वा ।
¶ D निर्घातश्च ।
** D अकुशलकर्म ।

अलोभः शौचलक्षणम् । शुचिभावः शुचिकर्म वा शौचं भावविशुद्धिः निःकल्मषता धर्मसाधनमात्रा*स्वप्यनभिष्वङ्ग इत्यर्थः । अशुचिर्हि भावकल्मषसंयुक्त इहामुत्र चाशुभफलमकुशलं कर्मोपचिनोत्युपदिश्यमानमपि च श्रेयो न प्रतिपद्यते । 5 तस्माच्छौचं धर्म इति ॥ ४ ॥

सत्यर्थे† भवं वचः सत्यं सद्भ्यो वा हितं सत्यम् । तदननृतमपरुष‡मपिशुनमनसभ्यमचपलमनाविलमविरलमसंभ्रान्तं मधुरमभिजातमसंदिग्धं स्फुटमौदार्ययुक्तमग्राम्यपदार्थाभि§व्याहारमसी||भरमरागद्वेषयुक्तं सूत्रमार्गानुसारप्रवृत्तार्थमर्घ्यमर्थिजन- 10 भावग्रहणसमर्थमात्मपरानुग्राहकं¶ निरुपधं देशकालोपपन्नमनवद्यमर्हच्छासनप्रशस्तं यतं मितं याचनं प्रच्छनं प्रश्नव्याकरणमिति सत्यं धर्मः ॥ ५ ॥

योगनिग्रहः संयमः । स** सप्तदशविधः । तद्यथा । पृथिवीकायिकसंयमः अप्कायिकसंयमः तेजस्कायिकसंयमः वायुकायिक- 15 संयमः वनस्पतिकायिकसंयमः द्वीन्द्रियसंयमः त्रीन्द्रियसंयमः चतुरिन्द्रियसंयमः पञ्चेन्द्रियसंयमः प्रेक्ष्यसंयमः उपेक्ष्यसंयमः†† अपहृत्यसंयमः‡‡ प्रमृज्यसंयमः कायसंयमः वाक्संयमः मनःसंयमः उपकरणसंयम इति संयमो धर्मः ॥ ६ ॥

* K मात्रादिष्व ।　　† K सत्यार्थे ।　　‡ K अपुरुष ।

§ D अभिध्याहारं C ०र्थाभिव्याहरं ।　　|| K असौतरम् ।

¶ B आत्मपरार्थानुग्राहकं ।　　** KD omit स ।

†† B उपेक्षसंयमः ।　　‡‡ C अवहृत्य ।

तपो द्विविधम्। तत्परस्ता*द्वक्ष्यते†। प्रकीर्णकं चेदमनेक-
विधम्। तद्यथा। यववज्रमध्ये चन्द्रप्रतिमे द्वे‡ कनकरत्नमुक्ता-
वल्यस्तिस्रः सिंहविक्रीडिते द्वे सप्तसप्तमिकाद्याः प्रतिमाश्चतस्रः
भद्रोत्तरमाचाम्लवर्धमानं सर्वतोभद्रमित्येवमादि§। तथा द्वादश
भिक्षुप्रतिमा मासिकाद्या आसप्तमासिक्याः|| सप्त¶, सप्तरात्रिक्याः 5
तिस्रः, अहोरात्रिकी, रात्रिकी चेति ॥ ७ ॥

बाह्याभ्यन्तरोपधिशरीरान्नपानाद्याश्रयो भावदोषपरित्यागस्त्यागः** ॥ ८ ॥

शरीरधर्मोपकरणादिषु निर्ममत्वमाकिंचन्यम् ॥ ९ ॥

व्रतपरिपालनाय ज्ञानाभिवृद्धये कषायपरिपाकाय च गुरु- 10
कुलवासो ब्रह्मचर्यमस्वातन्त्र्यं गुर्वधीनत्वं†† गुरुनिर्देशस्थायित्व-
मित्यर्थः‡‡ च। पञ्चाचार्याः प्रोक्ताः प्रव्राजको दिगाचार्यः श्रुतो-
द्देष्टा श्रुतसमुद्देष्टा आम्नायार्थवाचक इति। तस्य ब्रह्मचर्यस्येमे
विशेषगुणा भवन्ति। अब्रह्म§§विरतिव्रतभावना|||| यथोक्ता
इष्टस्पर्शरसरूप¶¶गन्धशब्दविभूषानभिनन्दित्वं चेति ॥ १० ॥ 15

* IX. 19 and 20. † C वक्ष्यति। ‡ K adds द्वे before चन्द्रप्रतिमे।

§ C puts this before भद्रोत्तरम्। || K मासिकः।

¶ B adds सप्त सप्तचतुर्दशैकविंशतिरात्रिक्यस्तिस्रः। S सूत्रानवबोधादुपजातभ्रान्तिना केनापि रचितमेतद् and explains how the mistake might have arisen. D Marginal notes नैदं वाचकगीतं किं तु अज्ञपठितं टीकायां तथाकथितत्वात्।

** C adds धर्म after त्याग।

†† K गुर्वी। ‡‡ D इत्यर्थः आचार्यग्रहणाच्च पञ्च।

§§ K ब्रह्म for अब्रह्म। |||| C विरतिर्व्रत। ¶¶ C omits रूप।

अनित्याशरणसंसारैकत्वान्यत्वाशुचित्वास्रवसंवर-निर्जरालोकबोधिदुर्लभधर्मस्वाख्यात*तत्त्वानुचिन्तन-मनुप्रेक्षाः ॥ ७ ॥

एता द्वादशानुप्रेक्षाः । तत्र बाह्याभ्यन्तराणि शरीरशय्या-
5 सनवस्त्रादीनि द्रव्याणि सर्वसंयोगाश्चानित्या इत्यनुचिन्तयेत्§ ।
एवं ह्यस्य चिन्तयतः तेष्वभिष्वङ्गो न भवति|| मा भून्मे
तद्वियोगजं दुःखमित्यनित्यानुप्रेक्षा ॥ १ ॥

यथा निराश्रये जनविरहिते वनस्थलीपृष्ठे बलवता
क्षुत्परिगतेनामिषैषिणा¶ सिंहेनाभ्याहतस्य मृगशिशोः शरणं न
10 विद्यते एवं जन्मजरामरणव्याधिप्रियविप्रयोगाप्रियसंप्रयोगे-
प्सितालाभदारिद्र्यदौर्भाग्यदौर्मनस्यमरणादिसमुत्थेन दुःखेनाभ्या-
हतस्य जन्तोः संसारे शरणं न विद्यत इति चिन्तयेत् । एवं
ह्यस्य चिन्तयतो नित्यमशरणोऽस्मीति नित्योद्विग्नस्य**
सांसारिकेषु भावेष्वनभिष्वङ्गो भवति । अर्हच्छासनोक्त एव
15 विधौ घटते तद्धि†† परं शरणमित्यशरणानुप्रेक्षा ॥ २ ॥

अनादौ संसारे नरकतिर्यग्योनिमनुष्यामरभवग्रहणेषु चक्र-
वत्परिवर्तमानस्य जन्तोः सर्व एव जन्तवः स्वजनाः परजना वा‡‡ ।
न हि स्वजनपरजनयोर्व्यवस्था विद्यते । माता हि भूत्वा

---

* DC स्वाख्यातत्त्वा० । † D शरीराणि शय्या० C असन ।
‡ C संयोगश्च । § D चिन्तयेत् for अनुचिन्तयेत् ।
|| D adds कस्मात् । ¶ क्षुत्पिपासापरिगतेन । ** K नित्योद्विग्नस्य ।
†† A तद्विपरीतं । ‡‡ K स्वजनः परजनो वा ।

भगिनी भार्या दुहिता च भवति । भगिनी भूत्वा माता भार्या दुहिता च भवति । भार्या* भूत्वा भगिनी दुहिता माता च भवति । दुहिता †भूत्वा माता भगिनी भार्या च भवति ॥ तथा पिता भूत्वा भ्राता पुत्रः पौत्रश्च भवति । भ्राता भूत्वा पिता पुत्रः पौत्रश्च भवति । पौत्रो 5 भूत्वा पिता भ्राता पुत्रश्च भवति । पुत्रो भूत्वा पिता भ्राता पौत्रश्च भवति ॥ भर्ता भूत्वा दासो भवति । दासो भूत्वा भर्ता भवति । शत्रुर्भूत्वा मित्रं भवति मित्रं भूत्वा शत्रुर्भवति । पुमान्भूत्वा स्त्री भवति नपुंसकं च । स्त्री भूत्वा पुमान्नपुंसकं च भवति । नपुंसकं भूत्वा स्त्री पुमांश्च भवति‡ । एवं चतुरशीति- 10 योनिप्रमुखशतसहस्रेषु रागद्वेषमोहाभिभूतैर्जन्तुभिरनिवृत्त- विषयतृष्णै§रन्योन्यभक्षणाभिघातवधबन्धाभियोगाक्रोशादिजनि- तानि तीव्राणि दुःखानि प्राप्यन्ते । अहो द्वन्द्वारामः कष्टस्वभावः संसार इति चिन्तयेत् । एवं|| ह्यस्य चिन्तयतः संसारभयो- द्विग्नस्य निर्वेदो भवति । निर्विण्णश्च संसारप्रहाणाय घटत इति 15 संसारानुप्रेक्षा ॥ ३ ॥

एक एवाहं न मे कश्चित्स्वः परो वा विद्यते । एक एवाहं जाये । एक एव म्रिये । न मे कश्चित्स्वजनसंज्ञः परजनसंज्ञो वा व्याधिजरामरणादीनि दुःखान्यपहरति प्रत्यंशहारी वा भवति । एक एवाहं स्वकृतकर्मफलमनुभवामीति चिन्तयेत् । 20

---

* K adds च । † C adds च । ‡ DC add इति ।
§ D तृष्णैः । || K adds एवम् ।

एवं ह्यस्य चिन्तयतः स्वजनसंज्ञकेषु स्नेहानुरागप्रतिबन्धो न भवति परसंज्ञकेषु* च द्वेषानुबन्धः। ततो निःसङ्गतामभ्युपगतो† मोक्षायैव यतत‡ इत्येकत्वानुप्रेक्षा ॥ ४ ॥

शरीरव्यतिरेकेणात्मानमनुचिन्तयेत्। अन्यच्छरीरमन्यो 5 ऽहम् ऐन्द्रियकं शरीरमतीन्द्रियो ऽहम् अनित्यं शरीरं नित्यो ऽहम् अज्ञं शरीरं ज्ञो ऽहम् आद्यन्तवच्छरीरमनाद्यन्तो ऽहम् बहूनि च मे शरीरशतसहस्राण्यतीतानि संसारे परिभ्रमतः स एवायमहमन्यस्तेभ्य इत्यनु§चिन्तयेत्। एवं ह्यस्य चिन्तयतः शरीरप्रतिबन्धो|| न भवतीति अन्यश्च¶ शरीरान्नित्यो ऽहमिति 10 निःश्रेयसे संघटत** इत्यन्यत्वानुप्रेक्षा ॥ ५ ॥

अशुचि खल्विदं शरीरमिति†† चिन्तयेत्। तत्कथमशुचीति चेदाद्युत्तरकारणाशुचित्वादशुचिभाजनत्वादशुच्युद्भवत्वादशुभपरिणामपाकानुबन्धादशक्यप्रतीकारत्वाच्चेति‡‡। तत्राद्युत्तरकारणा§§शुचित्वात्तावच्छरीरस्याद्यं कारणं|||| शुक्रं शोणितं च 15 तदुभयमत्यन्ताशुचीति¶¶। उत्तरमाहारपरिणामादि। तद्यथा। कवलाहारो हि ग्रस्तमात्र एव श्लेष्माशयं*** प्राप्य श्लेष्मणा द्रवीकृतो ऽत्यन्ताशुचिर्भवति†††। ततः पित्ताशयं‡‡‡ प्राप्य पच्यमानो ऽम्ली-

---

* D परजनसंज्ञकेषु। † D अभ्यागतो। ‡ CKD घटते।
§ K omits इति। || D शरीरे प्रतिबन्धो। ¶ D अन्यत्वाच्च।
** CD घटत। †† C शरीरमनुचिन्तयेत्। ‡‡ D प्रतीकाराच्चेति।
§§ D करण। |||| D करणं। ¶¶ D omits इति।
*** D श्लेष्माश्रयं। ††† C adds इति। ‡‡‡ D पित्ताश्रयं।

कृतो ऽशुचिरेव भवति। पक्वो वाय्वाशयं* प्राप्य वायुना विभज्यते पृथक्खलः पृथक्रसः। खलान्मूत्रपुरीषादयो मलाः प्रादुर्भवन्ति रसाच्छोणितं परिणमति शोणितान्मांसम् मांसान्मेदः मेदसो ऽस्थीनि अस्थिभ्यो मज्जा† मज्जाभ्यः शुक्रमिति। सर्वं चैतच्छ्लेष्मादि शुक्रान्तमशुचिर्भवति। तस्मादाद्युत्तरकारणाशुचित्वादशुचिशरीरमिति॥ किं चान्यत् **अशुचिभाजनत्वात्** अशुचीनां खल्वपि भाजनं शरीरं कर्णनासाचिदन्तमलस्वेदश्लेष्मपित्तमूत्रपुरीषादीनामवस्करभूतं तस्मादशुचीति॥ किं चान्यत्। **अशुच्युद्भवत्वात्** एषामेव कर्णमलादीनामुद्भवः शरीरं तत उद्भवन्तीति। अशुचौ च‡ गर्भे संभवतीति अशुचि शरीरम्॥ किं चान्यत्। **अशुभपरिणामपाकानुबन्धा**दार्तवे बिन्दोराधानाप्रभृति खल्वपि शरीरं कललार्बुदपेशीघनव्यूहसंपूर्णगर्भ§कौमारयौवनस्थविरभावजनकेनाशुभपरिणामपा||केनानुबद्धं¶ दुर्गन्धि पूतिस्वभावं दुरन्तं तस्मादशुचि॥ किं चान्यत्। **अशक्यप्रतीकारत्वात्**** अशक्यप्रतीकारं खल्वपि शरीरस्याशुचित्वमुद्वर्तनरूक्षणस्नानानुलेपनधूपप्रघर्ष†† वासयुक्तिमाल्यादिभिरप्यस्य न शक्यमशुचित्वमपनेतुमशुच्यात्मकत्वात्शुच्युपघातकत्वाच्चेति। तस्मादशुचि शरीरमिति। एवं ह्यस्य चिन्तयतः शरीरे निर्वेदो भवति‡‡। निर्विण्णश्च शरीरप्रहाणाय घटत इति अशुचित्वानुप्रेक्षा॥ ६॥

---

* D वाय्वाश्रयं। † C मज्जानः। ‡ S. च = or. § D गर्भा।

|| K विपाक। ¶ C अनुबन्धं। ** D अशक्यप्रतीकारात्।

†† K प्रकर्ष, C om. धप। ‡‡ C भवतीति।

आस्रवानिहामुत्रापाय* युक्तान्महानदीस्रोतोवेगतीक्ष्णानकुशला-
गमकुशलनिर्गमद्वारभूतानिन्द्रियादीनवद्यतश्चिन्तयेत् । तद्यथा ।
स्पर्शनेन्द्रियप्रसक्तचित्तः सिद्धो ऽनेकविद्याबलसंपन्नो ऽप्याकाशगो
ऽष्टाङ्गमहानिमित्तपारगो गार्ग्यः सत्यकिर्निधनमाजगाम† । तथा
5 प्रभूतयवसोदकप्रमाथावगाहादिगुणसंपन्नवनविचारिणश्च‡ मदो-
त्कटा बलवन्तो ऽपि हस्तिनो हस्तिबन्धकीषु स्पर्शनेन्द्रियसक्त-
चित्ता ग्रहणमुपगच्छन्ति । ततो बन्धवधदमनवाहनाङ्कुशपार्ष्णि-
प्रतोदाभिघातादिजनितानि तीव्राणि दुःखान्यनुभवन्ति ।
नित्यमेव स्वयूथस्य§ स्वच्छन्दप्रचारसुखस्य|| ¶वनवासस्यानुस्मरन्ति ।
10 तथा मैथुनसुखप्रसङ्गादाहित**गर्भाश्वतरी प्रसवकाले प्रसवितु-
मशक्नुवती तीव्रदुःखाभिहतावशा†† मरणमभ्युपैति । एवं सर्व
एव स्पर्शनेन्द्रियप्रसक्ता इहामुत्र च विनिपातमृच्छन्तीति‡‡ ॥
तथा जिह्वेन्द्रियप्रसक्ता मृतहस्तिशरीरस्थस्रोतोवेगोढवायसवत्§§
हैमन|||| घृतकुम्भप्रविष्टमूषिकवत् गोष्ठप्रसक्तह्रदवासिकूर्मवत्¶¶
15 मांसपेशीलुब्धश्येनवत् बडिशामिषगृद्ध***मत्स्यवच्चेति ॥ तथा
घ्राणेन्द्रियप्रसक्ता ओषधिगन्धलुब्धपन्नगवत् पललगन्धानुसारिमू-

---

* C पाप for अपाय ।    † SD उपजगाम for आजगाम ।

‡ K वनचारिणश्च ।    § C omits.    || K सुख्यस्य for सुखस्य ।

¶ D adds च ।    ** D प्रसंगाहित ।

†† D अभिघाता अवशा मरणं K अवसान C अवश्य० ।

‡‡ D अर्छन्तीति ।

§§ Cf. Pariśiṣṭaparvan II 380 ff. D वगाढ for वेगोढ ।

|||| C हेमन्त ।    ¶¶ cf. Pancatantra I. 13.    *** D गृध्र ।

षिकत्वेति ॥ तथा चक्षुरिन्द्रियप्रसक्ताः स्त्रीदर्शनप्रसङ्गादर्जुनक-
चोरवत् दीपालोकलोलपतङ्गवद्विनिपातमृच्छन्तीति चिन्तयेत् ॥
तथा श्रोत्रेन्द्रियप्रसक्तास्तित्तिरकपोतकपिञ्जलवत् गीतसंगीत-
ध्वनिलोलमृगवद्विनिपातमृच्छन्तीति चिन्तयेत्। एवं हि चिन्त-
यन्नास्रवनिरोधाय घटत इति आस्रवानुप्रेक्षा ॥ ७ ॥ 5

संवरांश्च महाव्रतादीन्गुप्त्यादिपरिपालनाद्गुणतश्चिन्तयेत्* ।
सर्वे ह्येते यथोक्तास्रवदोषाः† संवृतात्मनो न भवन्तीति चिन्त-
येत्। एवं ह्यस्य चिन्तयतो मतिः संवरायैव घटत इति
संवरानुप्रेक्षा ॥ ८ ॥

निर्जरा वेदना विपाक इत्यनर्थान्तरम्। स द्विविधो 10
ऽबुद्धिपूर्वः कुशलमूलश्च । तत्र नरकादिषु कर्मफलविपाको यो
ऽबुद्धिपूर्वकस्तमवद्यतो ऽनुचिन्तयेदकुशलानुबन्ध इति। तपः-
परीषहजयकृतः कुशलमूलः। तं गुणतो ऽनुचिन्तयेत्। शुभानु-
बन्धो निरनुबन्धो वेति। एवमनुचिन्तयन्कर्मनिर्जरणायैव‡ घटत
इति निर्जरानुप्रेक्षा ॥ ९ ॥ 15

पञ्चास्तिकायात्मकं§ विविधपरिणाममुत्पत्तिस्थित्यन्यतानु-
ग्रहप्रलययुक्तं लोकं चित्रस्वभावमनुचिन्तयेत्। एवं ह्यस्य
चिन्तयतस्तत्त्वज्ञानविशुद्धिर्भवतीति लोकानुप्रेक्षा ॥ १० ॥

---

* S probably महाव्रतादिगुप्त्यादिपरिपालनात् गुणवधि: C परिपालनाय गुणत० ।

† D यथोक्ता आस्रवजनिता दोषाः ।    ‡ K निर्जरायैव ।

§ K & C add च D कायात्मकं for अस्तिकायात्मकं ।

अनादौ संसारे नरकादिषु तेषु* भवग्रहणेष्वनन्तकृत्वः परिवर्तमानस्य जन्तोर्विविधदुःखाभिहतस्य मिथ्यादर्शनाद्युपहतमतेर्ज्ञानदर्शनावरणमोहान्तरायोदयाभिभूतस्य सम्यग्दर्शनादिविशुद्धो† बोधिर्दुर्लभो भवतीत्यनुचिन्तयेत् । एवं ह्यस्य
5 बोधिदुर्लभत्वमनुचिन्तयतो बोधिं प्राप्य प्रमादो न भवतीति बोधिदुर्लभत्वानुप्रेक्षा ॥ ११ ॥

सम्यग्दर्शनद्वारः पञ्चमहाव्रतसाधनो द्वादशाङ्गोपदिष्टतत्त्वो गुप्त्यादिविशुद्धव्यवस्थानः संसारनिर्वाहको निःश्रेयसप्रापको
10 भगवता परमर्षिणार्हताहो स्वाख्यातो‡ धर्म इत्येवमनुचिन्तयेत् । एवं ह्यस्य धर्मस्वाख्यात§तत्त्वमनुचिन्तयतो मार्गाच्यवने तदनुष्ठाने च व्यवस्थानं भवतीति|| धर्मस्वाख्यात¶तत्त्वानुचिन्तनानुप्रेक्षाः ॥ १२ ॥

उक्ता अनुप्रेक्षाः । परीषहान्वक्ष्यामः** ।

15 ## मार्गाच्यवननिर्जरार्थं परिषोढव्याः परीषहाः ॥ ८ ॥

सम्यग्दर्शनादेर्मोक्षमार्गादच्यवनार्थं कर्मनिर्जरार्थं च परिषोढव्याः परीषहा†† इति । तद्यथा ।

---

* C तेषु twice.
† Var. S. सम्यग्दर्शनादिर्विशुद्धो ।
‡ C स्वाख्यातो ।
§ CD धर्मस्वाख्यातत्त्व ।
|| K omits इति ।
¶ C धर्मस्वाख्यातत्त्व D धर्मस्वाख्यातत्त्वानुप्रेक्षा ।
** K add इति ।
†† D puts इति before परीषहाः ।

**क्षुत्पिपासाशीतोष्णदंशमशकनाग्न्यारतिस्त्रीचर्या-निषद्याशय्या*क्रोशवधयाचनालाभरोगतृणस्पर्शमल-सत्कारपुरस्कारप्रज्ञाज्ञानादर्शनानि ॥ ९ ॥**

क्षुत्परीषहः पिपासा शीतं उष्णं दंशमशकं नाग्न्यं अरतिः स्त्रीपरीषहः चर्यापरीषहः निषद्या शय्या आक्रोशः वधः याचनं अलाभः रोगः तृणस्पर्शः मलं† सत्कारपुरस्कारः प्रज्ञाज्ञाने ऽदर्शनपरीषह इत्येते द्वाविंशतिर्धर्म‡विघ्नहेतवो यथोक्तं प्रयोजनमभिसंधाय रागद्वेषौ निहत्य परीषहाः परिषोढव्या भवन्ति ।

पञ्चानामेव§ कर्मप्रकृतीनामुदयादेते परीषहाः प्रादुर्भवन्ति । तद्यथा|| । ज्ञानावरणवेदनीयदर्शनचारित्रमोहनीयान्तरायाणामिति ।

**सूक्ष्मसंपरायच्छद्मस्थवीतरागयोश्चतुर्दश ॥ १० ॥**

सूक्ष्मसंपरायसंयते छद्मस्थवीतरागसंयते च¶ चतुर्दश परीषहा भवन्ति** क्षुत्पिपासाशीतोष्णदंशमशकचर्याप्रज्ञा-ज्ञानालाभ††शय्यावधरोगतृणस्पर्शमलानि ।

* P शय्या । † D मलः । ‡ D द्वाविंशति धर्म० ।

§ KD add च । || D omits.

¶ DC omit च । ** K सन्ति ।

†† C puts अलाभ before प्रज्ञा D puts अलाभ after वध ।

## एकादश जिने ॥ ११ ॥

एकादश परीषहाः संभवन्ति जिने वेदनीयाश्रयाः । तद्यथा । क्षुत्पिपासाशीतोष्णदंशमशकचर्याशय्यावधरोगतृणस्पर्शमलपरीषहाः ।

5 ## बादरसंपराये सर्वे ॥ १२ ॥

बादरसंपरायसंयते सर्वे द्वाविंशतिरपि परीषहाः संभवन्ति ।

## ज्ञानावरणे प्रज्ञाज्ञाने ॥ १३ ॥

ज्ञानावरणोदये* प्रज्ञाज्ञानपरीषहौ भवतः ।

## दर्शनमोहान्तराययोरदर्शनालाभौ ॥ १४ ॥

10 दर्शनमोहान्तराययोरदर्शनालाभौ† यथासङ्ख्यं दर्शनमोहोदये ऽदर्शनपरीषहः लाभान्तरायोदये ऽलाभपरीषहः ।

## चारित्रमोहे नाग्न्यारतिस्त्रीनिषद्याक्रोशयाचनासत्कारपुरस्काराः ॥ १५ ॥

चारित्रमोहोदये एते नाग्न्यादयः सप्त परीषहा भवन्ति ।

15 ## वेदनीये शेषाः ॥ १६ ॥

वेदनीयोदये शेषा एकादश परीषहा भवन्ति ये जिने संभवन्तीत्युक्तम् । कुतः शेषाः । एभ्यः प्रज्ञाज्ञानादर्शनालाभनाग्न्यारतिस्त्रीनिषद्याक्रोशयाचनासत्कारपुरस्कारेभ्य इति ।

---

* D ज्ञानावरणीयादये ।    † AC omit this : whole S not clear

## एकादयो भाज्या युगपदेकोनविंशतेः* ॥ १७ ॥

एषां द्वाविंशतेः परीषहाणामेकादयो भजनीया युगपदेकस्मिन् जीवे आ एकोनविंशतेः†। अत्र शीतोष्णपरीषहौ युगपन्न भवतः। अत्यन्तविरोधित्वात्। तथा चर्याशय्यानिषद्यापरीषहाणामेकस्य सम्भवे द्वयोरभावः ॥ 5

## सामायिकच्छेदोपस्थाप्यपरिहारविशुद्धिसूक्ष्मसंपराययथाख्यातानि‡ चारित्रम् ॥ १८ ॥

सामायिकसंयमः छेदोपस्थाप्यसंयमः परिहारविशुद्धिसंयमः सूक्ष्मसंपरायसंयमः यथाख्यातसंयम इति पञ्चविधं चारित्रम्। तत्पुलाकादिषु विस्तरेण वक्ष्यामः। 10

## अनशनावमौदर्यवृत्तिपरिसङ्ख्यानरसपरित्यागविविक्तशय्यासनकायक्लेशा§ बाह्यं तपः ॥ १९ ॥

अनशनं अवमौदर्यं वृत्तिपरिसङ्ख्यानं रसपरित्यागः विविक्तशय्यासनता कायक्लेश इत्येतत्षड्विधं बाह्यं तपः। सम्यग्योगनिग्रहो गुप्तिरित्यतः [IX. 4] प्रभृति|| सम्यगित्यनुवर्तते। संयमरक्षणार्थं कर्मनिर्जरार्थं च चतुर्थषष्ठाष्टमादि सम्यगनशनं तपः ॥ 15

---

* KAP & C add आ before युगप॰ B.K भाज्या युगपदेकस्मिन्नैकोनविंशतेः।

† D एकोनविंशतिभ्यः। ‡ Var S and K. केचिच्छब्दपदमेव सूत्रमभिधीयते।

§ K शय्यासनताक्लेशा D ॰शय्यासनता कायक्लेशा। || C प्रभृते।

अवमौदर्यम् अवममित्यूननाम* । अवममुदरमस्य अवमोदरः अवमोदरस्य भावः अवमौदर्यम्† । उत्कृष्टावकृष्टौ‡ वर्जयित्वा मध्यमेन कवलेन त्रिविधमवमौदर्यं भवति । तद्यथा । अल्पाहारावमौदर्यमुपार्धावमौदर्यं§ प्रमाणप्राप्तात्किंचिदूनावमौदर्यमिति कवलपरिसङ्ख्यानं च|| प्राग्द्वात्रिंशद्भ्यः कवलेभ्यः ॥

वृत्तिपरिसङ्ख्यानमनेकविधम् । तद्यथा । उत्क्षिप्तान्तप्रान्तचर्यादीनां सक्तुकुल्माषौदनादीनां¶ चान्यतममभिगृह्यावशेषस्य** प्रत्याख्यानम् ॥

रसपरित्यागो ऽनेकविधः । तद्यथा । मद्यमांसमधुनवनीतादीनां रसविकृतीनां प्रत्याख्यानं विरसरूक्षाद्यभिग्रहश्च ॥

विविक्तशय्यासनता नाम एकान्ते ऽनाबाधे†† ऽसंसक्ते स्त्रीपशुषण्डक‡‡विवर्जिते शून्यागारदेवकुलसभापर्वतगुहादीनामन्यतमस्मिन् समाध्यर्थं संलीनता ॥

कायक्लेशो ऽनेकविधः । तद्यथा । स्थानवीरासनोत्कटुका§§सनैकपार्श्वदण्डायतशयनातापनाप्रावृतादीनि|||| सम्यक्प्रयुक्तानि बाह्यं तपः । अस्मात्षड्विधादपि¶¶ बाह्यात्तपसः सङ्गत्यागशरीरलाघवेन्द्रियविजयसंयमरक्षण***कर्मनिर्जरा भवन्ति ॥

* KD ०त्यूनं नाम । † K अवमौदार्यं C अवमोदर्यं ।
‡ C adds च D उत्कृष्टानुत्कृष्टौ । § D अपार्धावमोदर्यं । || D परिसङ्ख्या च ।
¶ D कुल्माषादनादीनां । ** चान्यत् समभिग्रह्य । †† D अनबाधे ।
‡‡ C पण्ड । §§ K उत्कुटुक D उत्कटुकासन S उत्कुटुक ( not explained ).
|||| S अप्रावरण । ¶¶ K अस्मात् । *** K संरक्षण ।

**प्रायश्चित्तविनयवैयावृत्त्यस्वाध्यायव्युत्सर्गध्यानान्युत्तरम् ॥ २० ॥**

सूत्रक्रमप्रामाण्यादुत्तरमित्यभ्यन्तरमाह[*]। प्रायश्चित्तं विनयो वैयावृत्यं स्वाध्यायो व्युत्सर्गो ध्यानमित्येतत्षड्विधमभ्यन्तरं तपः ॥

**नवचतुर्दशपञ्चद्विभेदं यथाक्रमं प्राग्ध्यानात् ॥ २१ ॥** 5

तदभ्यन्तरं तपः नवचतुर्दशपञ्चद्विभेदं भवति यथाक्रमं प्राग्ध्यानात् । इत उत्तरं यद्वक्ष्यामः । तद्यथा ।

**आलोचनप्रतिक्रमणतदुभयविवेकव्युत्सर्गतपश्छेदपरिहारोपस्थापनानि[†] ॥ २२ ॥**

प्रायश्चित्तं नवभेदम् । तद्यथा । आलोचनं प्रतिक्रमणं 10 आलोचनप्रतिक्रमणे विवेकः व्युत्सर्गः तपः छेदः परिहारः उपस्थापनमिति[‡] ॥

आलोचनं प्रकटनं[§] प्रकाशनमाख्यानं प्रादुःकरणमित्यनर्थान्तरम् । प्रतिक्रमणं[||] मिथ्यादुःकृतसंप्रयुक्तः प्रत्यवमर्शः[¶] प्रत्याख्यानं कायोत्सर्गकरणं च । एतदुभयमालोचनप्रतिक्रमणे । विवेको 15 विवेचनं विशोधनं प्रत्युपेक्षणमित्यनर्थान्तरम्[**] । स एष संसक्तान्न-

* K omits आह । † D उपस्थानानि । ‡ D उपस्थानमिति ।
§ C विकटं D विवरणं for प्रकटनं । || K परिक्रमणं ।
¶ D ०संप्रयुक्तप्रत्यवमर्शः । ** K प्रत्यवेक्षणम् D प्रत्युपेक्षेपणं ।

पानोपकरणादिषु* भवति । **व्युत्सर्गः** †प्रतिष्ठापनमित्य-
नर्थान्तरम् । एषो ऽप्यनेषणीयान्नपानोपकरणादिष्वशङ्कनीय‡-
विवेकेषु च भवति । **तपो** बाह्यमनशनादि प्रकीर्णं§ चानेक-
विधं चन्द्रप्रतिमादि । **छेदो** ऽपवर्तनमपहार इत्यनर्थान्तरम् ।
5 स प्रव्रज्यादिवस‖पक्षमाससंवत्सराणामन्यतमेषां भवति । **परि-
हारो** मासिकादिः । **उपस्थापनं** पुनर्दीक्षणं पुनश्चरणं पुनर्व्रता-
रोपणमित्यनर्थान्तरम् । तदेतन्नवविधं प्रायश्चित्तं देशं कालं
शक्तिं संहननं संयमविराधनां च कायेन्द्रियजातिगुणोत्कर्षकृतां
च प्राप्य विशुद्ध्यर्थं यथार्हं दीयते चाचर्यते¶ च । चिती संज्ञान-
10 विशुद्ध्योर्धातुः तस्य चित्तमिति भवति **निष्टान्तमौणादिकं च ॥

एवमेभिरालोचनादिभिः कृच्छ्रैस्तपोविशेषैर्जनिताप्रमादः तं
व्यतिक्रमं प्रायश्चेतयति चेतयंश्च न पुनराचरतीति । ततः
प्रायश्चित्तम् । अपराधो वा [१]प्रायस्तेन विशुध्यत इति । अतश्च
प्रायश्चित्तमिति ॥

15 **ज्ञानदर्शनचारित्रोपचाराः ॥ २३ ॥**

विनयश्चतुर्भेदः । तद्यथा । ज्ञानविनयः दर्शनविनयः
चारित्रविनयः उपचारविनयः†† । तत्र **ज्ञानविनयः** पञ्चविधः

* C संशक्तान्नपानोपरि(धि)शय्यादिषु ।
† SD प्रतिष्ठापनम् ।
‡ SD अशकनीय ।
§ D प्रकीर्णकं वा ।
‖ C प्रव्रज्यादिवसादिपक्ष ।
¶ C च चर्यते च ।
** D निष्टानम् ।
†† CD add इति ।

१ S प्रायः शब्देन वापराधो ऽभिधीयते । तेनालोचनादिना ।

मतिज्ञानादिः। **दर्शनविनयः** एकविध एव सम्यग्दर्शनविनयः। **चारित्रविनयः** पञ्चविधः सामायिकविनयादिः। **औपचारिकविनयो** ऽनेकविधः सम्यग्दर्शनज्ञानचारित्रादिगुणाधिकेष्वभ्युत्थानासनप्रदानवन्दनानुगमादिः*। विनीयते तेन तस्मिन्वा विनयः† ॥ 5

**आचार्योपाध्यायतपस्विशैक्षक‡ग्लानगणकुलसङ्घसाधुसमनोज्ञानाम् ॥ २४ ॥**

वैयावृत्त्यं दशविधं। तद्यथा§। आचार्यवैयावृत्त्यं उपाध्यायवैयावृत्त्यं तपस्विवैयावृत्त्यं शैक्षकवैयावृत्त्यं ग्लानवैयावृत्त्यं कुलवैयावृत्त्यं गणवैयावृत्त्यं सङ्घवैयावृत्त्यं साधुवैयावृत्त्यं समनोज्ञवैयावृत्त्यमिति। व्यावृत्तभावो वैयावृत्त्यं|| व्यावृत्तकर्म च¶। 10 तत्राचार्यः पूर्वोक्तः पञ्चविधः। आचारगोचरविनयं स्वाध्यायं वाचा**र्यादनु तस्मादुपाधीयत इत्युपाध्यायः। सङ्ग्रहोपग्रहानुग्रहार्थं ††चोपाधीयते[१] सङ्ग्रहादीन्वास्योपाध्येतीत्युपा[२]ध्यायः। द्विसङ्ग्रहो निर्ग्रन्थ आचार्योपाध्यायसङ्ग्रहः। त्रिसङ्ग्रहा 15 निर्ग्रन्थी आचार्योपाध्यायप्रवर्तिनीसङ्ग्रहा। प्रवर्तिनी दिगाचार्येण व्याख्याता। हिताय प्रवर्तते प्रवर्तयति चेति प्रवर्तिनी।

---

* D अनुगमानादिः।
† D तेनास्मिन्वेति विनयः।
‡ D शिक्षक।
§ D omits तद्यथा।
|| C adds इति।
¶ C व्यावृत्तकर्म वा।
** D चाचार्यादनु K पश्चाचार्यादनु।
†† D चोपधीयते।

---

१ S सेव्यते।
२ S स्मरति।

*विकृष्टोग्रतपोयुक्तस्तपस्वी । अचिरप्रव्रजितः शिक्षयितव्यः शिक्षः शिक्षामर्हतीति शैक्षो† वा । ग्लानः प्रतीतः । गणः स्थविरसन्ततिसंस्थितिः । कुलमाचार्यसन्ततिसंस्थितिः । सङ्घश्चतुर्विधः श्रमणादिः‡ । साधवः संयताः । संभोगयुक्ताः समनोज्ञाः ।
5 एषामन्नपानवस्त्रपात्रप्रतिश्रयपीठफलकसंस्तारादिभिर्धर्मसाधनैरुपग्रहः शुश्रूषा भेषजक्रिया कान्तारविषमदुर्गोपसर्गेष्वभ्युपपत्ति§रित्येतदादि वैयावृत्त्यम् ॥

## वाचनाप्रच्छनानुप्रेक्षाम्नायधर्मोपदेशाः|| ॥ २५ ॥

स्वाध्यायः पञ्चविधः । तद्यथा । वाचना प्रच्छनं¶ अनुप्रेक्षा
10 आम्नायः धर्मोपदेश इति । तत्र **वाचनं** शिष्याध्यापनम् । **प्रच्छनं** ग्रन्थार्थयोः । **अनुप्रेक्षा** ग्रन्थार्थयोरेव मनसाभ्यासः । **आम्नायो** घोषविशुद्धं परिवर्तनं** गुणनं रूपदान††मित्यर्थः । अर्थोपदेशो व्याख्यानमनुयोग‡‡वर्णनं **धर्मोपदेश** इत्यनर्थान्तरम् ।

## बाह्याभ्यन्तरोपध्योः ॥ २६ ॥

---

* D विप्रकृष्ट ।

† C शिष्यः and शैष्यः D शिष्यः शिष्यामर्हतीति शैक्षिक शैक्षो वा ।

‡ D श्रवणादिः ।

§ C अभ्यवपत्ति, D अभ्युपपत्तिः ।

|| K धर्मोपध्यायाः ।

¶ D प्रच्छना ।

** K परिवर्त्तितम् ।

†† B रूपदानम् ।

‡‡ K अनयोगोपवर्णनम्, C अनुयोगो ।

व्युत्सर्गो द्विविधः बाह्यो ऽभ्यन्तरश्च। तत्र बाह्यो द्वादश-रूपकस्यो*पधेः। अभ्यन्तरः शरीरस्य कषायाणां चेति॥

## उत्तमसंहननस्यैकाग्रचिन्तानिरोधो ध्यानम्॥२७॥

उत्तमसंहननं वज्रर्षभमर्धवज्र†नाराचं च। तद्युक्तस्यैकाग्र-चिन्तानिरोधश्च ध्यानम्॥ 5

## आमुहूर्तात्॥२८॥

तद्ध्यानमामुहूर्ताद्भवति परतो न भवति दुर्ध्यानत्वात्॥

## आर्तरौद्रधर्मशुक्लानि॥२९॥

तच्चतुर्विधं भवति। तद्यथा। आर्तं रौद्रं धर्मं‡ शुक्ल-मिति। तेषाम् 10

## परे मोक्षहेतू॥३०॥

तेषां चतुर्णां ध्यानानां परे धर्मशुक्ले मोक्षहेतू भवतः पूर्वे त्वार्तरौद्रे संसारहेतू इति॥

अत्राह। किमेषां लक्षणमिति। अत्रोच्यते

## आर्तममनोज्ञानां सम्प्रयोगे तद्विप्रयोगाय स्मृति-समन्वाहारः॥३१॥ 15

---

* D रूपिकस्य। † K वज्रर्षभं नाराचं च, D उत्तमसंहननं चतुर्विधं वज्रर्षभनाराचं ऋषभनाराचं नाराचमर्धनाराचं च।

‡ D धर्म्यं here and hereafter.

अमनोज्ञानां विषयाणां संप्रयोगे तेषां विप्रयोगार्थं यः स्मृतिसमन्वाहारो भवति तदार्तध्यानमित्याचक्षते । किं चान्यत्

**वेदनायाश्च ॥ ३२ ॥**

वेदनायाश्चामनोज्ञायाः संप्रयोगे तद्विप्रयोगाय स्मृतिसम-
5 न्वाहार आर्तमिति । किं चान्यत्

**विपरीतं मनोज्ञानाम् ॥ ३३ ॥**

मनोज्ञानां विषयाणां मनोज्ञायाश्च वेदनाया विप्रयोगे तत्संप्रयोगाय* स्मृतिसमन्वाहार आर्तम् । किं चान्यत्

**निदानं च ॥ ३४ ॥**

10 कामोपहतचित्तानां पुनर्भवविषयसुखगृद्धानां निदानमार्त-
ध्यानं भवति ।

**तदविरतदेशविरतप्रमत्तसंयतानाम् ॥ ३५ ॥**

तदेतदार्तध्यानमविरतदेशविरतप्रमत्तसंयतानामेव भवति ।

**हिंसानृतस्तेयविषयसंरक्षणेभ्यो रौद्रमविरतदेश-**
15 **विरतयोः ॥ ३६ ॥**

हिंसार्थमनृतवचनार्थं स्तेयार्थं विषयसंरक्षणार्थं च स्मृतिसमन्वाहारो रौद्रध्यानं† तदविरतदेशविरतयोरेव भवति‡ ।

* S perhaps तत्संप्रयोगार्थः, K तदविप्रयोगाय ।

† D रौद्रं ध्यानम् । ‡ C भवतीति ।

## आज्ञापायविपाकसंस्थानविचयाय धर्ममप्रमत्तसंयतस्य ॥ ३७ ॥

आज्ञाविचयाय अपायविचयाय विपाकविचयाय संस्थानविचयाय च* स्मृतिसमन्वाहारो धर्मध्यानम्। तदप्रमत्तसंयतस्य भवति। किं चान्यत् 5

## उपशान्तक्षीणकषाययोश्च ॥ ३८ ॥

उपशान्तकषायस्य क्षीणकषायस्य च धर्मं ध्यानं भवति। किं चान्यत्

## शुक्ले चाद्ये[१] ॥ ३९† ॥

शुक्ले चाद्ये ध्याने पृथक्त्ववितर्कैकत्ववितर्के ‡चोपशान्तक्षीण- 10 कषाययोर्भवतः। आद्ये शुक्ले ध्याने पृथक्त्ववितर्कैकत्ववितर्के पूर्वविदो भवतः।

## परे केवलिनः ॥ ४० ॥

परे द्वे शुक्ल§ध्याने केवलिन एव भवतः न छद्मस्थस्य।

* D omits च। † P शुक्ले चाद्ये पूर्वविदः ॥ ३९ ॥
‡ CD omit च। § CD शुक्ले।

१ SH भाष्यकारस्तु पूर्वविद इति सूत्रावयवं पृथक्छिनत्तीति सम्बन्धयति वा एवमेते शुक्लध्याने पूर्वविदो भवतः पूर्वविदौ यावदुपशान्तक्षीणकषायौ तयोर्भवतः सूत्रान्तरमिव व्याचष्टे न तु परमार्थतः पृथक् सूत्रम् पर्वप्रणयनात्।

अत्राह । उक्तं भवता पूर्वे शुक्ले ध्याने* परे शुक्ले ध्याने† इति‡ । तत्कानि तानीति । अत्रोच्यते

**पृथक्त्वैकत्ववितर्कसूक्ष्मक्रियाप्रतिपातिव्युपरतक्रियानिवृत्तीनि§ ॥ ४१ ॥**

पृथक्त्ववितर्कं|| एकत्ववितर्कं सूक्ष्मक्रियाप्रति¶पाति व्युपरतक्रियानिवृत्तीति चतुर्विधं शुक्लध्यानम्** ।

**तत्र्येककाययोगायोगानाम् ॥ ४२ ॥**

तदेतत्††चतुर्विधं शुक्ल‡‡ध्यानं त्रियोगस्यान्यतमयोगस्य§§ काययोगस्यायोगस्य च यथासङ्ख्यं भवति । तत्र त्रियोगानां पृथक्त्ववितर्कमेकान्यतमयोगानामेकत्ववितर्कं काययोगानां सूक्ष्मक्रियमप्रतिपात्ययोगानां व्युपरतक्रियम||||निवृत्तीति ।

**एकाश्रये सवितर्के पूर्वे ॥ ४३ ॥**

एकद्रव्याश्रये सवितर्के पूर्वे ध्याने प्रथमद्वितीये । तत्र सविचारं प्रथमम् ।

**अविचारं द्वितीयम्¶¶ ॥ ४४ ॥**

---

* D शुक्लध्याने ।　† D शुक्लध्याने ।　‡ D omits इति ।

§ D निवर्तीनि, DCK every where निवर्त्ति not निवृत्ति ।

|| C पृथक्त्ववितर्कैकत्व ।　¶ C सूक्ष्मक्रियमप्रतिपाति ।

** चतुर्विधं ध्यानं शुक्लं ।　†† C तदेवं ।

‡‡ DC शुक्लं ।　§§ D एकान्यतमयोगस्य ।

|||| C क्रियानिवृत्तीति ।　¶¶ P doubts whether this is a sutra.

अविचारं सवितर्कं द्वितीयं ध्यानं भवति ॥

अत्राह। वितर्कविचारयोः कः प्रतिविशेष इति। अत्रोच्यते

**वितर्कः श्रुतम्* ॥ ४५ ॥**

यथोक्तं श्रुतज्ञानं वितर्को भवति ॥

**विचारोऽर्थव्यञ्जनयोगसंक्रान्तिः ॥ ४६ ॥** 5

अर्थव्यञ्जनयोगसंक्रान्तिर्विचार इति।

एतदभ्यन्तरं तपः संवरत्वादभिनवकर्मोपचयप्रतिषेधकं निर्जरणफलत्वात्कर्मनिर्जरकम्। अभिनवकर्मोपचयप्रतिषेधकत्वात्पूर्वोपचितकर्मनिर्जरकत्वाच्च निर्वाणप्रापकमिति ॥

अत्राह। उक्तं भवता परीषहजयात्तपसो ऽनुभाव[1]तश्च कर्म- 10 निर्जरा भवतीति†। तत्किं सर्वे सम्यग्दृष्टयः समनिर्जरा आहोस्विदस्ति कश्चित्प्रतिविशेष इति। अत्रोच्यते

**सम्यग्दृष्टिश्रावकविरतानन्तवियोजकदर्शनमोहक्षपकोपश§मकोपशान्तमोहक्षपकक्षीणमोहजिनाः क्रमशो ऽसङ्ख्येयगुणनिर्जराः ॥ ४७ ॥** 15

सम्यग्दृष्टिः श्रावकः विरतः अनन्तानुबन्धिवियोजकः दर्शनमोहक्षपकः[2] मोहोपशमकः उपशान्तमोहः मोहक्षपकः

---

* श्रुति। † C निर्जरण। ‡ K भवति। § KD उपशामक।

---

१ तपसः is ablative अनुभाव=विपाक।

२ मोहक्षपक = क्षपणोपशमनक्रियाविष्टयोर्ग्रहणम् ॥

क्षीणमोहः जिन इत्येते दश क्रमशो ऽसङ्ख्येयगुणनिर्जरा भवन्ति। तद्यथा। सम्यग्दृष्टेः श्रावको ऽसङ्ख्येयगुणनिर्जरः* श्रावकाद्विरतः विरतादनन्तानुबन्धिवियोजक इत्येवं शेषाः॥

## पुलाकबकुशकुशीलनिर्ग्रन्थस्नातका निर्ग्रन्थाः॥ ४८॥

5 पुलाको बकुशः कुशीलो निर्ग्रन्थः स्नातक इत्येते पञ्च† निर्ग्रन्थविशेषा भवन्ति। तत्र सततमप्रतिपातिनो जिनोक्ता-दागमान्निर्ग्रन्थ**पुलाकाः**। नैर्ग्रन्थ्यं प्रति प्रस्थिताः शरीरोपकरण-विभूषानुवर्तिन ऋद्धियशस्कामाः सातगौरवाश्रिता अविविक्त-परिचाराश्छेदशबलयुक्ता निर्ग्रन्था‡ **बकुशाः**। कुशीला द्विविधाः

10 प्रतिसेवनाकुशीलाः§ कषायकुशीलाश्च। तत्र प्रतिसेवनाकुशीला नैर्ग्रन्थ्यं प्रति प्रस्थिता ‖अनियतेन्द्रिया¶: कथंचित्किंचिदुत्तर-गुणेषु विराधयन्तश्चरन्ति ते** **प्रतिसेवनाकुशीलाः**। येषां तु†† संयतानां सतां कथंचित्संज्वलनकषाया उदीर्यन्ते ते **कषाय-कुशीलाः**। ये वीतरागच्छद्मस्था ईर्यापथप्राप्तास्ते **निर्ग्रन्थाः**।

15 ईर्या योगः पन्थाः संयमः योगसंयमप्राप्ता इत्यर्थः। सयोगाः शैलेशीप्रतिपन्नाश्च‡‡ केवलिनः **स्नातका** इति॥

---

* D असंख्येयगुणः निर्जरः।

† C पञ्चविधा।

‡ K omits निर्ग्रन्था। C निर्ग्रन्थबकुशा।

§ K adds च।

‖ K adds ये।

¶ C अनियमितेन्द्रि०।

** C omits ते।

†† D omits तु।

‡‡ C शैलेशीं।

**संयमश्रुतप्रतिसेवनातीर्थलिङ्गलेश्योपपातस्थान-विकल्पतः साध्याः*** ॥ ४९ ॥

एते पुलाकादयः पञ्च निर्ग्रन्थविशेषा एभिः संयमादिभिर-नुयोगविकल्पैः† साध्या भवन्ति । तद्यथा ।

**संयमः** । कः कस्मिन्संयमे भवतीति । उच्यते । पुलाकब-कुशप्रतिसेवनाकुशीला द्वयोः संयमयोः सामायिके छेदोपस्थाप्ये च । कषायकुशीलो‡ द्वयोः परिहारविशुद्धौ§ सूक्ष्मसंपराये च । निर्ग्रन्थस्नातकावेकस्मिन्यथाख्यातसंयमे ॥

**श्रुतम्** । पुलाकबकुशप्रतिसेवनाकुशीला उत्कृष्टेनाभिन्नाचर-दशपूर्वधराः । कषायकुशीलनिर्ग्रन्थौ चतुर्दशपूर्वधरौ । जघन्येन पुलाकस्य श्रुतमाचारवस्तु[1] । बकुशकुशीलनिर्ग्रन्थानां श्रुतमष्टौ प्रवचनमातरः । श्रुतापगतः केवली स्नातक इति ॥

**प्रतिसेवना** । पञ्चानां मूलगुणानां रात्रिभोजनविरति-षष्ठानां|| पराभियोगाद्बलात्कारेणान्यतमं¶ प्रतिसेवमानः पुलाको भवति । मैथुनमित्येके । बकुशो द्विविधः उपकरणबकुशः शरीरबकुशश्च । तत्रोपकरणाभिष्वक्तचित्तो विविधविचित्र-

---

* K adds इति after साध्याः । † CK अनुगम ।
‡ CD कषायकुशीला । § D परिहारविशुद्धिसूक्ष्मसंपराययोः ।
|| D रात्रिभोजनस्य च । ¶ D adds वा, बलात्कारेण वान्यतमं ।

---

S नवमपूर्वान्तःपाति तृतीयमाचारवस्तु यावच्छ्रुतम् ।

महाधनोपकरणपरिग्रहयुक्तो बहुविशेषोपकरणकांक्षायुक्तो* नित्यं तत्प्रतिसंस्कारसेवी †भिक्षुरुपकरणबकुशो भवति । शरीराभिष्वक्तचित्तो‡ विभूषार्थं तत्प्रतिसंस्कारसेवी शरीरबकुशः । प्रतिसेवनाकुशीलो मूलगुणानविराधयन्नुत्तरगुणेषु §कांचिद्विराधनां
5 प्रतिसेवते । कषायकुशीलनिर्ग्रन्थस्नातकानां प्रतिसेवना नास्ति ॥

**तीर्थम्** । सर्वे|| सर्वेषां तीर्थकराणां तीर्थेषु भवन्ति । एके त्वाचार्या मन्यन्ते पुलाकबकुशप्रतिसेवनाकुशीलास्तीर्थे नित्यं भवन्ति शेषास्तीर्थे वातीर्थे वा ॥

**लिङ्गम्** । लिङ्गम् द्विविधम् द्रव्यलिङ्गं भावलिङ्गं च ।
10 भावलिङ्गं प्रतीत्य सर्वे पञ्च निर्ग्रन्था भावलिङ्गे भवन्ति¶ । द्रव्यलिङ्गं प्रतीत्य भाज्याः ॥

**लेश्याः** । पुलाकस्योत्तरास्तिस्रो लेश्या भवन्ति । बकुशप्रतिसेवनाकुशीलयोः सर्वाः षडपि । कषायकुशीलस्य परिहारविशुद्धेस्तिस्र उत्तराः । सूक्ष्मसंपरायस्य निर्ग्रन्थस्नातकयोश्च
15 शुक्लैव केवला भवति । अयोगः शैलेशीप्रतिपन्नो ऽलेश्यो भवति ॥

**उपपातः** । पुलाकस्योत्कृष्टस्थितिषु देवेषु सहस्रारे । बकुशप्रतिसेवनाकुशीलयोर्द्वाविंशतिसागरोपमस्थितिष्वारणाच्युतकल्पयोः । कषायकुशीलनिर्ग्रन्थयोस्त्रयस्त्रिंशत्सागरोपमस्थि-

* C °आकांक्षा ।
† Probably S omits भिक्षुः
‡ K °अभियुक्त ।
§ D किंचित् for कांचित् ।
|| D omits सर्वे ।
¶ K सन्ति ।

तिषु देवेषु सर्वार्थसिद्धे । सर्वेषामपि जघन्या पल्योपम-
पृथक्त्वस्थितिषु सौधर्मे । स्नातकस्य निर्वाणमिति ॥ 5

**स्थानम् ।** असङ्ख्येयानि संयमस्थानानि कषायनिमित्तानि
भवन्ति । तत्र सर्वजघन्यानि लब्धिस्थानानि पुलाककषायकुशी-
लयोः । तौ युगपदसङ्ख्येयानि स्थानानि गच्छतः । ततः पुलाको
व्युच्छिद्यते* कषायकुशीलस्त्वसङ्ख्येयानि† स्थानान्येकाकी गच्छति ।
ततः कषायकुशीलप्रतिसेवनाकुशीलबकुशा युगपदसङ्ख्येयानि 10
संयमस्थानानि गच्छन्ति । ततो बकुशो व्युच्छिद्यते । ततो
ऽसङ्ख्येयानि स्थानानि गत्वा प्रतिसेवनाकुशीलो व्युच्छिद्यते । ततो
ऽसङ्ख्येयानि स्थानानि गत्वा कषायकुशीलो व्युच्छिद्यते । अत
ऊर्ध्वमकषायस्थानानि निर्ग्रन्थः प्रतिपद्यते । सो ऽप्यसङ्ख्येयानि
स्थानानि गत्वा व्युच्छिद्यते । अत ऊर्ध्वमेकमेव‡ स्थानं गत्वा 15
निर्ग्रन्थस्नातको निर्वाणं प्राप्नोतीति ॥ एषां§ संयमलब्धिरनन्ता-
नन्तगुणा भवतीति ॥

इति तत्त्वार्थाधिगमे ऽर्हत्प्रवचनसङ्ग्रहे
नवमोऽध्यायः समाप्तः ॥

---

* D व्यवच्छिद्यते । † D संयमस्थानानि ।
‡ C omits मेकमेव । § C एतेषाम् ।

# अथ दशमोऽध्यायः ॥

**मोहक्षयाज्ज्ञानदर्शनावरणान्तरायक्षयाच्च केवलम् ॥ १ ॥**

मोहनीये क्षीणे ज्ञानावरणदर्शनावरणान्तरायेषु क्षीणेषु च केवलज्ञानदर्शनमुत्पद्यते*। आसां चतसृणां कर्मप्रकृतीनां क्षयः 5 केवलस्य हेतुरिति। तत्क्षयादुत्पद्यत इति हेतौ† पञ्चमीनिर्देशः[1]। मोहक्षयादिति पृथक्करणं क्रमप्रसिद्ध्यर्थं यथा‡ गम्येत पूर्वं मोहनीयं कृत्स्नं क्षीयते ततो ऽन्तर्मुहूर्तं छद्मस्थवीतरागो भवति। ततो ऽस्य ज्ञानदर्शनावरणान्तरायप्रकृतीनां तिसृणां युगपत्क्षयो भवति। ततः केवलमुत्पद्यते§ ॥

10 अत्राह। उक्तं मोहक्षयाज्ज्ञानदर्शनावरणान्तरायक्षयाच्च केवलमिति। अथ मोहनीयादीनां क्षयः कथं भवतीति||।

अत्रोच्यते

* K ज्ञानं, D केवलं ज्ञानदर्शनमुत्पद्यते। † K हेतुपञ्चमी, D हेतुः।

‡ C यथागम्येते, K गम्यते। § CD add इति।

|| K omits इति।

१ (अतस्तद्धिगमलक्षणो गुणो हेतुः विभाषागुणेऽस्त्रियामिति हेतौ पञ्चमीनिर्देशो) S

## बन्धहेत्वभावनिर्जराभ्याम् ॥ २ ॥

मिथ्यादर्शनादयो बन्धहेतवो ऽभिहिताः। तेषामपि तदावरणीयस्य कर्मणः क्षयादभावो भवति सम्यग्दर्शनादीनां चोत्पत्तिः। तत्त्वार्थश्रद्धानं सम्यग्दर्शनम् तन्निसर्गादधिगमाद्वेत्युक्तम्। एवं संवरसंवृतस्य महात्मनः सम्यग्व्यायामस्याभिनवस्य 5 कर्मण उपचयो न भवति पूर्वोपचितस्य च यथोक्तैर्निर्जराहेतुभिरत्यन्तक्षयः। ततः सर्वद्रव्यपर्यायविषयं परमैश्वर्यमनन्तं केवलं ज्ञान*दर्शनं प्राप्य शुद्धो† बुद्धः सर्वज्ञः सर्वदर्शी जिनः केवली भवति। ततः प्रतनुशुभचतुःकर्मावशेष आयुःकर्मसंस्कारवशाद्विहरति। ततो ऽस्य 10

## कृत्स्नकर्मक्षयो मोक्षः ॥ ३ ॥

कृत्स्नकर्मक्षयलक्षणो मोक्षो भवति। पूर्वं क्षीणानि चत्वारि कर्माणि पश्चाद्वेदनीयनामगोत्रायुष्कक्षयो भवति। तत्क्षयसमकालमेवौदारिकशरीरवियुक्तस्यास्य जन्मनः प्रहाणं। हेत्वभावाच्चोत्तरस्याप्रादुर्भावः। एषावस्था कृत्स्नकर्मक्षयो मोक्ष इत्युच्यते। 15 किं चान्यत्।

## औपशमिकादिभव्यत्वाभावाच्चान्यत्र केवलसम्यक्त्वज्ञानदर्शनसिद्धत्वेभ्यः ॥ ४ ॥

---

* K ज्ञानं। † D सिद्धो।

औपशमिकक्षायिकक्षायोपशमिकौदयिकपारिणामिकानां* भावानां भव्यत्वस्य चाभावान्मोक्षो भवति अन्यत्र केवलसम्यक्त्व-केवलज्ञानकेवलदर्शनसिद्धत्वेभ्यः। एते ह्यस्य क्षायिका नित्यास्तु† मुक्तस्यापि भवन्ति ॥

5 **तदनन्तरमूर्ध्वं गच्छत्यालोकान्तात् ॥ ५ ॥**

तदनन्तरमिति कृत्स्नकर्मक्षयानन्तरमौपशमिकाद्यभावानन्तरं चेत्यर्थः। मुक्त ऊर्ध्वं गच्छत्यालोकान्तात्। कर्मक्षये‡ देह-वियोगसिध्यमानगतिलोकान्तप्राप्तयो§ऽस्य युगपदेकसमयेन भवन्ति। तद्यथा। प्रयोगपरिणामादिसमुत्थस्य गतिकर्मण 10 उत्पत्तिकार्यारम्भविनाशा युगपदेकसमयेन भवन्ति तद्वत् ॥

अत्राह। प्रहीणकर्मणो निरास्रवस्य कथं गतिर्भवतीति। अत्रोच्यते

**पूर्वप्रयोगादसङ्गत्वाद्बन्धच्छेदात्तथागतिपरिणामाच्च तद्गतिः ॥ ६ ॥**

15 **पूर्वप्रयोगात्।** यथा हस्तदण्डचक्रसंयुक्तसंयोगात्पुरुषप्रयत्नत-श्चाविद्धं कुलालचक्रमुपरतेष्वपि पुरुषप्रयत्नहस्तदण्डचक्रसंयोगेषु

* K औपशमिकक्षायोपशमिकौदयिकानां च. D क्षायोपशमिक, B पारिणामि-कादीनां। † D omits तु।

‡ Var S कर्मक्षयदेहवियो०, D कर्मक्षयात्, D सिद्ध्यमान here and here-after § DC add द्वि

पूर्वप्रयोगाद्भ्रमत्येवा*संस्कारपरिक्षयात् एवं यः पूर्वमस्य कर्मणा† प्रयोगो जनितः स क्षीणे ऽपि कर्मणि गतिहेतुर्भवति । तत्कृता गतिः ॥ किं चान्यत् ।

**असङ्गत्वात्** । पुद्गलानां जीवानां च गतिमत्त्वमुक्तं‡ नान्येषां द्रव्याणाम् । तत्राधोगौरवधर्माणः पुद्गला ऊर्ध्वगौरवधर्माणो 5 जीवाः । एष स्वभावः । अतो ऽन्यासङ्गादिजनिता गतिर्भवति । यथा सत्स्वपि प्रयोगादिषु गतिकारणेषु जातिनियमेनाधस्तिर्य-गूर्ध्वं च स्वाभाविक्यो§ लोष्टवाय्वग्नीनां गतयो दृष्टाः तथा सङ्गविनिर्मुक्तस्योर्ध्वगौरवादूर्ध्वमेव सिध्यमानगतिर्भवति । सं-सारिणस्तु ||कर्मसङ्गादधस्तिर्यगूर्ध्वं च ॥ किं चान्यत् । 10

**बन्धच्छेदात्** । यथा रज्जुबन्धच्छेदात्पेडाया बीजकोश-बन्धनच्छेदाच्चैरण्डबीजानां¶ गतिर्दृष्टा तथा कर्मबन्धनच्छेदा-त्सिध्यमानगतिः** ॥ किं चान्यत् ।

**तथागतिपरिणामाच्च** । ऊर्ध्वगौरवात्पूर्वप्रयोगादिभ्यश्च हेतुभ्यः†† तथास्य गतिपरिणाम उत्पद्यते येन सिध्यमानगति- 15 र्भवति । ऊर्ध्वमेव‡‡ भवति नाधस्तिर्यग्वा गौरवप्रयोगपरिणामा-

* K भवति ।

† K कर्मणो ।

‡ C गतिमत्त्वमुक्ताम् ।

§ K स्वभाविका ।

|| D.C संयोगात् ।

¶ B बीजादीनां ।

** D गतिर्भवति ।

†† K हेतुतः ।

‡‡ C ऊर्ध्वं नाधस्ति० ।

सङ्गयोगाभावात्* । तद्यथा । गुणवद्भूमिभागारोपितमृतुकाल-
जातं† बीजोद्भेदादङ्कुरप्रवालपर्णपुष्पफलकालेष्वविमानित‡-
सेकदौहृदादिपोषणकर्मपरिणतं कालच्छिन्नं शुष्कमलाब्वप्सु न
निमज्जति तदेव गुरुकृष्णमृत्तिकालेपैर्घनैर्बहुभिरालिप्तं घन-
5 मृत्तिकालेपवेष्टन§जनितागन्तुकगौरवमप्सु प्रचिप्तं तज्जलप्रतिष्ठं‖
भवति यदा त्वस्याद्भिः क्लिन्नो¶ मृत्तिकालेपो व्यपगतो** भवति
तदा†† मृत्तिकालेपसङ्गविनिर्मुक्तं मोक्षानन्तरमेवोर्ध्वं गच्छति
आसलिलोर्ध्वतलात् एवमूर्ध्वगौरवगतिधर्मा जीवो ऽप्यष्ट‡‡कर्म-
मृत्तिकालेपवेष्टितः §§तत्सङ्गात्संसारमहार्णवे भवसलिले निमग्नो‖‖
10 भवासक्तो ऽधस्तिर्यगूर्ध्वं च गच्छति सम्यग्दर्शनादिसलिलक्लेदा-
त्प्रहीणाष्टविधकर्ममृत्तिकालेप ऊर्ध्वगौरवादूर्ध्वमेव गच्छत्या¶¶
लोकान्तात् ॥

स्यादेतत् लोकान्तादप्यूर्ध्वं मुक्तस्य गतिः किमर्थं न
भवतीति । अत्रोच्यते । धर्मास्तिकायाभावात् । धर्मास्तिकायो
हि जीवपुद्गलानां गत्युपग्रहेणोपकुरुते । स तत्र नास्ति ।
15 तस्माद्गत्युपग्रहकारणाभावात्परतो गतिर्न भवत्यप्सु अलाबुवत् ।

---

* D संयोग for योग A.C omit परिणामासङ्गयोग । † K भागरोपित ।
‡ K अधिमानित । § C वेष्टित ।
‖ D तत्प्रविष्टं for तज्जलप्रतिष्ठ । ¶ K क्लन्नो ।
** K व्यक्तो । †† D omits.
‡‡ DC अष्टविध । §§ D तव for तत् ।
‖‖ D मग्नो । ¶¶ C adds तु ।

नाधो न तिर्यगित्युक्तम् । तत्रैवानुश्रेणिगतिर्लोकान्ते ऽवतिष्ठते* मुक्तो निःक्रिय इति ॥[१]

**क्षेत्रकालगतिलिङ्गतीर्थचारित्रप्रत्येकबुद्धबोधितज्ञानावगाहनान्तरसङ्ख्याल्पबहुत्वतः साध्याः† ॥ ७ ॥**

क्षेत्रं कालः गतिः लिङ्गं तीर्थं चारित्रं प्रत्येकबुद्धबोधितः ज्ञानं अवगाहना‡ अन्तरं सङ्ख्या अल्पबहुत्वमित्येतानि द्वादशानुयोगद्वाराणि सिद्धस्य भवन्ति । एभिः सिद्धः साध्यो ऽनुगम्यश्चिन्त्यो व्याख्येय इत्येकार्थत्वम्§ । तत्र पूर्वभावप्रज्ञापनीयः प्रत्युत्पन्नभावप्रज्ञापनीयश्च द्वौ नयौ भवतः । तत्कृतो ऽनुयोगविशेषः । तद्यथा ।

क्षेत्रम्‖ । कस्मिन्क्षेत्रे¶ सिध्यतीति । प्रत्युत्पन्नभावप्रज्ञापनीयं प्रति सिद्धिक्षेत्रे सिध्यति** । पूर्वभावप्रज्ञापनीयस्य जन्म प्रति

---

* C तिष्ठति । † D साध्यः । ‡ D अवगाहनं ।
§ B एकार्थत्वमिति । ‖ C omits. ¶ K तस्मिन् ।
** C सिध्यतीति ।

---

१. H. gives at the end of the commentary on this Sûtra the following very interesting passage which being incorrect is unfortunately not quite intelligible.

सूरिर्यशोभद्रस्य दि शिष्येण समुद्धृता स्वबोधार्थं तत्त्वार्थस्य हि टीका जडकार्याजभाष्टतायात्यां उद्धृत्या तत्त्वार्थार्धस्य टीकान्त्येति । एतदुक्तं भवति । हरिभद्राचार्येणार्धषणामध्यायानामाद्यानां टीका कृता भगवता तु गन्धहस्तिना सिद्धसेनेन नया कृता तत्त्वार्थटीका नयैर्वादस्थानैर्व्याकुला मस्ये एवाशषमुद्धृताचार्येण स्वबोधार्थं सात्यन्तगुर्व्वी वं डुपडुपिका टीका निष्पन्नेत्यलं प्रसङ्गेन ॥

पञ्चदशसु कर्मभूमिषु जातः सिध्यति* संहरणं प्रति मानुषक्षेत्रे सिध्यति*। तत्र प्रमत्तसंयताः संयतासंयताश्च† संह्रियन्ते। श्रमण्यपगतवेदः परिहारविशुद्धिसंयतः पुलाको ऽप्रमत्तश्चतुर्दशपूर्वी आहारकशरीरीति‡ न संह्रियन्ते। ऋजुसूत्रनयः
5 शब्दादयश्च त्रयः प्रत्युत्पन्नभावप्रज्ञापनीयाः शेषा नया उभयभावं प्रज्ञापयन्तीति॥

**कालः**। अत्रापि नयद्वयम्। कस्मिन्काले सिध्यतीति। प्रत्युत्पन्नभावप्रज्ञापनीयस्य अकाले सिध्यति। पूर्वभावप्रज्ञापनीयस्य जन्मतः संहरणतश्च। जन्मतो§ ऽवसर्पिण्यामुत्सर्पिण्यामन-
10 वसर्पिण्युत्सर्पिण्यां च जातः सिध्यति। एवं तावदविशेषतः। विशेषतो ऽप्यवसर्पिण्यां सुषमदुःषमायां सङ्ख्येयेषु वर्षेषु शेषेषु जातः सिध्यति दुःषमसुषमायां सर्वस्यां सिध्यति दुःषमसुषमायां जातो दुःषमायां सिध्यति न तु दुःषमायां जातः सिध्यति अन्यत्र नैव सिध्यति। संहरणं प्रति सर्वकालेष्ववसर्पिण्यामुत्सर्पि-
15 ण्यामनवसर्पिण्युत्सर्पिण्यां च सिध्यति॥

**गतिः**। प्रत्युत्पन्नभावप्रज्ञापनीयस्य सिद्धिगत्यां‖ सिध्यति। शेषास्तु नया द्विविधा अनन्तरपश्चात्कृतगतिकश्च एकान्तरपश्चात्कृतगतिकश्च। अनन्तरपश्चात्कृतगतिकस्य मनुष्यगत्यां सिध्यति। एकान्तरपश्चात्कृतगतिकस्याविशेषेण सर्वगतिभ्यः सिध्यति॥

---

* C सिध्यतीति।

† B प्रमत्तसंयतसंयतासंयता।

‡ C omits इति।

§ C जन्मनः।

‖ B सिद्धगत्याम्।

